## गुलबर्गा में प्रचार

हैदराबाद से चल कर एक दिन गुलबर्गा में पं० श्री रुद्रदत्त जी, पं० श्री पूर्णानन्द जी, तुलसीराम स्वामी तीनों उपदेशक ठहरे। ता० ९ की रात्रि में उपदेश हुआ। इस क़सबे के कई भद्रपुरुष आर्यधर्म से प्रेम रखते हैं। उद्योग करने से यहां आर्यसमाज स्थापित हो सकता है। आशा है कि इस हैदराबादीय शास्त्रार्थ के परिणाम का भी आस पास के स्थानों पर उत्तम प्रभाव होगा॥

## श्री स्वामीअच्युताश्रम जी की चिट्ठी

जो इस शास्त्रार्थ से कई मास पूर्व आर्यसमाज हैदराबाद में आई थी। इस को उत्तर सहित यहां पाठकों के अवलोकनार्थ प्रकाशित किया जाता है। पाठकवर्ग ने स्वामी जी की योग्यता का परिचय उन की छोटी २ दो तीन चिट्ठियों से तो पाभी लिया है जो कि ऊपर छप चुकी हैं, परन्तु वक्ष्यमाण चिट्ठी से जो उन्होंने अपने २। ३ मास के परिश्रम से रची है, उन की सिद्धान्तसम्बन्धिनी योग्यता और पशुवधसिद्धि के शास्त्रीय बल का भी परिचय चिट्ठी देखने से पाठकों को हो जायगा॥

# चिट्ठी

श्री सुदर्शनसहायः

श्री गणेशायनमः। केचिदत्र यागीयहिंसाविषये विप्रतिपद्यन्ते। विप्रतिपत्तिश्च, यागीयहिंसाविधिबोध्यानवावेदबोध्यानवामन्त्रबोध्यानवेति अत्रविधिकोटिर्वैदिकानां निषेधकोटिस्तुब्राह्मणस्यवेदत्वमनङ्गीकुर्वतांदयानन्दीयानाम्। अत्र हिंसात्वमात्रं न पक्षतावच्छेदकं रागप्रयुक्तहिंसादौ बाधात् यागीयेति विशेषणं रागश्च प्रत्यक्षादिप्रमाणजन्येष्टसाधनत्वप्रकारकज्ञानजन्येच्छा सा च चिकीर्षाद्वारा पुरुषं प्रवर्तयति। नैवं स्वर्गविषयणी प्रवृत्तिस्तादृशेच्छा जन्या=



SGDF
Sri Gargeshwari Digital Foundation

वैशेष्यानुपादाने सिद्धसाधनं=लौकिकवाक्यबोध्यत्व व्या-
वृत्त्यैविधिरितिसाध्यविशेषणम्=एवंविप्रतिपत्तौयागीयहिं-
सावेदबोध्यायागाङ्गतयाक्रियमाणत्वात् सोमाभिषववत्योय-
दङ्गत्वेनक्रियतेसतद्बोधकवेदबोध्यइतिव्याप्तेर्वेदबोध्यत्वसिद्धिः=
नापिविशेषणासिद्धिः= उक्ताहिंसाअङ्गम्प्रधानक्रियाप्रयुक्त-
क्रियात्वात्प्रयाजवत्= अत्रवायव्यंश्वेतमालभेतेतियागोवि-
हितः स च देवतोद्देशेन द्रव्यत्यागात्मकोयागो भवति स
च त्यागः क्वचिद्धोमपूर्वकः क्वचिदुत्सर्जनपूर्वकश्च यत्र होम
पूर्वकस्तत्र पशुरूपद्रव्यस्यान्तरेण विशसनं न घटत इति
विशसनमपेक्षते ॥ अतोस्याहिंसायाः प्रधानरूपयागक्रिया
प्रत्युक्तत्वात् न हेत्वसिद्धिः । नह्यत्रपशोरेवहोमः ॥ वपा-
होमादिश्रवणानुपपत्तेः॥ जातवेदो * वपयेत्यृग्घि वपाहोम
माचष्टे ॥ हृदयस्याग्रेवद्यतीति हृदयावदानम् । सच पशु-
संज्ञपनंविनावपोत्खेदनासंभवात्कथंसिद्ध्यतिअवदानं च प-
शोर्हवनेपि सिद्धं न समीहितमितिहिंसाया अनतिवृत्तिः हिं-
सा हि नाम सा यया क्रियया प्राणोवियुज्यते ॥ पशोर्होमे-
पिप्राणोवियुज्यतएव । यद्यप्यत्रसंहितायां पशुपदंनास्तीति
वक्तुं शक्नोति ॥ वसन्तायकपिञ्जलानालभते इतिशुक्लयजुः
संहितायां कपिञ्जलालम्भनंविहितम् । कपिञ्जलपदंहिप्राणि
विशेषं वदति आहचजैमिनिः ११ अ० प्र० ८ अ० दृष्टः प्रयोग

* तृतीयाष्टके प्रथमप्रश्ने जातवेदोवपयागच्छदेवान् त्वंꣳहि होता प्रथमो बभूथ ॥ घृतेन त्वं तनुवो वर्धयस्व स्वाहा । हे जातवेदः त्वं वपया देवान्प्रति गच्छ हि यस्मात् त्वं प्रथमो होता बभूथ त्वं घृतेन घृतवपया देवानां तनुवो वर्धयस्व स्वाहा कृतं हविरदन्तु देवाः कृतꣳहविरदन्तु देवाः ॥

इतिचेदिति॥छागोवामन्त्रवर्णादितिसूत्रेण १२ अध्यायस्थेन छागस्यवपायामेदसोनुब्रूहीतिमन्त्रेणछागसम्बन्धिवपारूप मेदोविशेषस्यग्रहणं प्रतिपाद्यते॥ अतोमन्त्रेणापिहिंसोक्ते-तिहिंसा यागांगम्=माहिंस्यात् सर्वाभूतानीति वचनं सामान्यतोहिंसानिषेधकं न विशेषतः हिंसाविधिश्च विशेषविषयः विरोधे उत्सर्गापवादन्यायआश्रयणीयःयस्तु मन्त्रवर्णः ओषधे त्रायस्वेतिस्वधितेमैनꣳहिꣳसीरिति च।सच हे ओषधे उपाकरणद्वितीयबर्हे एनं पशुं त्रायस्व छेदनार्थं रक्षस्वेत्यर्थः प्रकरणात्बर्हिषमन्तर्धाय छेदनं हि रक्षणं। अनन्तर्धाय छेदनेहि पशुर्नरक्षितस्स्यात् देवार्हं न स्यादित्यर्थः॥ हे स्वधिते एनं पशुं मनुष्यवन्माहिंसीरित्यर्थः तथा च ब्राह्मणं तैत्तिरीयसंहितायां षष्ठकाण्डे तृतीयप्रपाठके नवमानुवाके ओषधे त्रायस्वैनꣳस्वधिते मैनꣳहिꣳसीरित्याह वज्रोवै स्वधितिरसांत्यै॥पार्श्वत आच्छ्यति मध्यतोहिमनुष्या आच्छ्यन्तितिरश्चीनमाच्छ्यत्यनुचीनꣳहिमनुष्याआच्छ्यन्ति व्यावृत्याइति॥नायमपिमन्त्रोहिंसाभावंबोधयतियदितद्भावं बोधयेत् यूपच्छेदनेन विनियुंज्याद्विनियोगं चाहापस्तम्बः ओषधे त्रायस्वैनमित्यूर्ध्वाग्रं दर्भमन्तर्धाय स्वधिते मैनꣳ हिंसीरिति स्वधितिना प्रहरतीति। तेन दर्भद्वयमनन्तर्धाय माछिन्द्यात् किन्तु अन्तर्धाय छिन्द्यात् अन्यथा आव्रश्चन होमविधानं न कुर्यात्। प्रकरणपाठश्च व्यर्थः स्यात् फलवदर्थज्ञानोद्देश्येनाध्ययनं विहितं फलवत्वं चार्थज्ञानस्य क्रतुद्वारकं विद्वान्यजेतेत्यादिनार्थज्ञानस्य यागांगत्वाव-

SGDF
Sri Gargeshwari Digital Foundation

गमात्॥अथ मन्त्रार्थविरुद्धं ब्राह्मणमप्रमाणमिति न वाच्यं= संहितान्तर्गत्वात् अथ संहितायामपि कश्चिद्भागोऽप्रमाण-मिति चेत् न मन्त्रभागस्यापि तथात्वेकाक्षतिः मम तु यथा श्रुते विरोधेपि उक्तरीत्यैकवाक्यतोपपत्तेर्नक्षतिः ॥ मन्त्र-व्याख्यारूपस्य ब्राह्मणस्याप्रामाण्ये त्वद्व्याख्यानस्यापि प्रामाण्यं चिन्त्यं । अस्तु तत् मन्त्रोप्युक्तार्थ एव जातवेदो वपयेतिमन्त्रेणवपाश्रपणान्यथानुपपत्त्या हिंसा क्षेपणात् तस्मात् वेदबोध्या हिंसेति सिद्धं = = =

योहिहिंसां वैधीं न मनुते सपृष्टव्यः किमधर्म इति न विधिबोध्योतनिषिद्धत्वात् नाद्यःहिंसाया अधर्मत्वे माना-भावात् अधर्मत्वं च धर्मविरुद्धत्वं तच्चवेदविहितभिन्नत्वं वेदविहितत्वं च लिङादिपदबोध्यनियोगविषयत्वं अ-ग्नीषोमीयं पशुमालभेत इति आलम्भननियोगस्य विष-यत्वात् धर्म एव । एवं वसन्ताय कपिञ्जलानालभत इत्य-त्रापि । आलभतिश्च कूटादिप्रायश्चित्तपूर्वकोपाकरणरश-नापरिव्ययपणयूपनियोजनप्रोक्षणस्रुच्याघारानन्तरकालिक समंजनपर्यग्नीकरणवपाश्रपणान्वारम्भणाधिगुप्रैषसमका-लशामित्रानुनयनाधस्तात् बर्हिरुपासनप्रत्यङ्मुखावस्थाप-नवाशादिप्रायश्चित्तसंज्ञप्तहोमरशनाविमोकांगाप्यायनवपो-त्कृन्तनतत्प्रतितपनहोमतदुद्धारणाभिघारणैकादशावदानो-द्धरणशृतप्रश्नप्रतिवचनहविर्गुदकाण्डजाघनीहोमादिक्रिया-कलापः । अत्र यस्य कस्यचिल्लोपेपि प्रायश्चित्तविधानात्

सर्वमिदमालम्भनपदवाच्यम् । अतो हिंसा वेदविहितेति नाधर्मत्वं । नापि निषिद्धा निषेधवचनाभावात् माहिंसीरिति अर्थान्तरमित्युक्तम्=माहिंस्यात्सर्वा भूतानीति न संहितायामस्ति न ब्राह्मणे प्रमाणभावं कथयं ॥ मूलवेदविरोधाभावात् प्रमाणमिति चेत् । न मूल वेदस्यैवाभावं पश्यतु भवान् यदि मूलवेदोदयानन्दोक्तमेवार्थं ब्रूयात् तर्ह्यविरोधः स एव न प्रकरणविरोधात्। प्रकरणं च पाशुकमन्यथैनमितिपदं पशुं कथं वदेत् वदति च भवान् एनं पशुमिति प्रकरणं नियामकं नो चेत् एनं यजमानमिति घटमिति वा किमिति न ब्रूयात् । अतः प्रकरणेनैव पशुं ब्रवीति तथा च न मां हिंसीरिति यथा श्रुतएवार्थो मन्त्रः किञ्च सन्तेप्राणोवायुना गच्छतां स यजत्रैरङ्गानि इतिमन्त्रौकथंसंगच्छेताम् आध्यात्मिकवायुःप्राणोबाह्यवायुना एकीभवतु पश्वङ्गानि यज्ञैस्सहगच्छतां यज्ञसाधनतांयात्विवतितदर्थः प्राणागमने कथमेतदुपपद्यताम् तस्मात्प्रकरणनियमोऽवश्यं वक्तव्यः हिंसापिउपेयेति कथं हिंसाधर्मोनिषिद्धोवा किञ्च भूतमात्रहिंसावर्ज्यैति हिंसाब्रवीति तथा च कथं ते घृतादिना होमसिद्धिः अन्तरेण दोहनं पयोन निस्सरति दोहनं च मातुर्वत्सस्य च दुःखं जनयति दुःखदापूर्वजननानुकूलव्यापारोहिहिंसा। पञ्चसूनागृहस्थस्येतिवचनं कण्डिन्यादीनांहिंसात्वं प्रतिपादयति यदि तत्र प्राणिवधएवाभिप्रेतइति मतं तदस्तु अनुमोदकस्य हिंसकत्वव्यपदेशः उक्तव्यापारस्यहिंसात्वं गमयति तथा च घृतादिसंपत्तिर्हिंसामूलेति वैदिककर्ममात्रस्य लोपः अतः सिद्धा हिंसा वेदबोध्येति ॥

यजमानस्यपशून्पाहीति श्रुतिर्नयज्ञाङ्गपशून्पाहीतिपदं बोधयतिकिंतुअनङ्गभूतान् गृहेविद्यमानान् प्रकरणं चान्यदीयं दर्शपूर्णमासौहि अनुष्ठेयतयोपदिश्येते तत्रपशोरप्रसक्तिः कस्य रक्षणं प्रार्थ्यम् अतोनेयं तवेष्टं श्रुतिःसाधयति—

बैल्वः खादिरोवा यूपस्स्यात् यूपश्च नाम पश्वनुबंधार्थमुपदीयते शक्यंचानेनकंचिदेवकाष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुं तत्रनियमः क्रियतइति यदिदमार्यसमाजवचनं तन्न सुन्दरम् = नियमफलानुपलब्धेः नियमोहिपक्षे प्राप्तस्यपरिपूरणम् ॥ विनापि अवहननं साधनांतरं तण्डुलनिष्पत्तौ प्राप्नोति तदाऽप्राप्तिरवहननस्यतत्पूरणं करोतिविधिः नहिपशुबन्धनसाधने यूपे खादिरत्वमप्राप्तं येन पूर्येत ॥ अथ यूपं तक्षति यूपमष्टास्त्रीकरोतीति वचनेन तक्षणसंस्कारविशिष्टकाष्ठविशेषःयूपइतिज्ञातेकाष्ठविशेष इतिजिज्ञासायांयःकोपिकाष्ठविशेषइति प्राप्तः तदानेन खादिरत्वं नियम्यतइतियदि ब्रूयात् तदास्तु नाम नियमः"अथापियत्तात्पर्यवर्णनम् क्षीराद्यादानार्थम् यज्ञे पशुबंधनं लोकवत् तेन सुरक्षिताः पयांसि दास्यंति तैश्च घृतोत्पत्त्या यागस्सिद्ध्यतीति तत्र सुखमेधते" एतदर्थं यूपानपेक्षणात् लोकत एव प्राप्तेः यूपे पशुं बध्नातीति व्यर्थ एवविधिः अतएव नियमोपि व्यर्थः अपूर्वाभावात् ॥

यदाह पशुबन्धनार्थं यूपइत्युक्त्वा गौरनुबन्ध्योजोग्नीषोमीय इति योदिति सूत्रे उदाहृतं तेन अग्निदेवतायास्सोमदेवतायाश्च गोरजस्य च बन्धनं गम्यते न हननमिति तदसत् नहीदमनुबन्ध्य इति पदं बंधनं वदति किन्तु अवभृथोत्तरं क्रियमाणं

ಪುಸ್ತಕದ ಸಂಖ್ಯೆ.........



पाशुकं कर्मवक्ति अग्नीषोमीयः सवनीयोनुबन्ध्य इतित्रयः पशवः तत्राग्नीषोमीयोजः गौरनुबन्ध्य इति तत्रानुबन्ध्यपदं यदि बंधनं ब्रूयात् गौरितिपदं व्यर्थम्। नह्यग्नीषोमीयोजोनुबन्ध्य इत्यन्वये गौरिति पदं तत्रान्वेतुयुक्तं अजोहितत्रान्वितः तेनावरुद्धश्च कथं गवि आकांक्षाफलाभावश्च यच्चाह शन्नो अस्तुद्विपदे शं चतुष्पदे इति श्रुतिर्हिंसानिवर्त्तिकेति तन्न। अयं च मन्त्रः यज्ञानंगतयाक्लृप्तानां द्विपदानां सेवकानां च चतुष्पदानां पश्वादीनां कुशलं यजमानप्रार्थ्यं बोधयति नतुयज्ञांगतया क्लृप्तानां पशूनामहिंसनं। यदपि पशोः सशरीरस्य सुखमुपलभ्यते मृते कथं सुखं शरीराभावादिति न चास्त्यनुमानमशरीरस्यात्मनो भोगः कश्चिदस्तीति तदपि न, यदिदं वात्स्यायनसम्मतं मतं मृतशरीरो न प्राप्नुयात् पुण्यफलं पारलौकिकं सुखं नाकांक्षेत् कृतहान्यकृताभ्यागमदोषं देहात्मवादे वदन् कथं नांगीकुर्यात् पारलौकिकं सुखं तथा चैतच्छरीरे गते शरीरान्तरेण शरीरं भुनक्तीति हृदयं तथैव अजस्य शरीते मृते शरीरान्तरेण पुण्यफलं भुनक्ति पशुः। योपि अध्वरशब्दो न हिंसावाचकः यज्ञश्चाध्वरःकथं तत्र हिंसेति सोपिननञ्नाभावमाचष्टेकिं त्वल्पार्थं अल्पा हिंसा यत्र सोध्वरः हिंसायामल्पत्वं च बलवदनिष्टाननुबन्धित्वं ध्वरोहिंसारागप्राप्तोनास्तीति वाऽध्वरः अध्वरशब्दश्च यज्ञे न यौगिकः किन्तु रूढः प्रवीण कुशलादिवत्। तथा च हिंसावतियागेऽयं शब्दः प्रवृत्तः हिंसाभावमेवाह—नहि वैधी हिंसा हिंसा भवति यद्धि शास्त्रं हिंसादोष इतिप्रत्यपादि तदेव दोषाभावं प्रतिपादयति शास्त्रोक्ते को विवादः तत्रैव विवादः यत्र न शास्त्रमस्ति अतएव राज्ञां

SGDF
Sri Gangeshwari Digital Foundation

शिक्षणरक्षणयोरधिकृतानां हन्तुर्हननदोष इत्याहस्म शास्त्रं तन्न्यायोत्रयोज्यतामिति । अतएव जैमिनिः मांसं तु सवनीयानां चोदनाविशेषादिति तृतीयाष्टमे तरसाः पुरोडाशास्सवनीया भवन्तीतयाहस्म शमिता च शब्दभेदात् इति तृतीयसप्तमे शमितुर्ऋत्विगन्यत्वमुक्तमेतेन यागीयहिंसा जैमिन्यादिसम्मता । यदि भवान्नांगीकरोति जैमिन्यादि सूत्राणामप्रामाण्यमुपेयात् वेदार्थनिर्णयार्थमपि सूत्राणां प्रामाण्यमिति लेखनं व्यर्थं स्यात्सूत्रप्रामाण्ये गतं ते मतं=

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषं ।

मोहादारभ्यते कर्म यत्तत्तामसमुच्यत इति । तदपि न हिंसाऽधर्म इति ब्रूते । नहि विहिता साऽधर्मो भवितुमर्हति अतएव मोहादारभ्यत इत्युक्तं नहि शास्त्रप्रयुक्ता प्रवृत्तिः मोहमूला न वा शास्त्रमधर्मं पुरुषं प्रवर्त्तयति तस्मात् सम्प्रदायावेदनमूलमिदं लेखनम्=

यान्यपि—बीजैर्यज्ञेषु यष्टव्यमितिवैवैदिकीश्रुतिः । अज संज्ञानि बीजानि छागं नो हन्तुमर्हथ ॥ नैषधर्मः सतां देवा यत्र वध्येत वै पशुरिति महाभारतानुशासिकवचनानि तान्यपि उपरिचरवसुवाक्येन ॥ ३३२ ॥ निषिद्धानि—देवानांतु मतं ज्ञात्वा वसुना पक्षसंश्रयात् । छागेनाजेन यष्टव्यमेवमुक्तं वचस्तदेति । यदपि—सुरा मत्स्या मधुमांसमासवं कृशरौदनम् । धूर्तैः प्रवर्त्तितं ह्येतन्नैतद्वेदेषु कल्पितमिति भारतवचनं कामकृतनिन्दापरम् । अत्रैतद्धृदयं धर्मव्याधोहि

ञ्जलिमुपदिशन् आत्मज्ञानसाधनाऽहिंसादिधर्मं प्रशंसन्वैदिक कर्म कामकृतं कर्म चानिन्दत् अहिंसाप्राशस्त्यार्थं न हि निन्देति न्यायात् अहिंसां स्तौति वस्तुतस्तु एकवाक्यतया भारतादि प्रामाण्यानङ्गीकारात् न भारतादिवचनेनेष्टसिद्धिस्ते = वैदिकाभ्युपगतार्थस्य त्वयानभ्युपगमात् यदि भवानस्मदुक्तमर्थमुपैति कथं मन्मतखण्डनम् अतस्ते पामरजनमोहकरमेव वचनमिति ॥

यदपि विरोधे त्वनपेक्षमसतिह्यनुमानमितिसूत्रमुदाजहार तन्नेष्टसम्पादकं यतइदं सूत्रं स्मृत्यर्थविरुद्धार्थबोधकं प्रत्यक्षवेदवचनं भवेत् स्मृतिःस्वकल्पितवेदमूलासती न प्रमाणमित्यर्थकं यद्यपि सामाजिकः मूलवेदविरुद्धं ब्राह्मणं प्रदर्शयेत्तर्हि अप्रमाणं भवेत् नैव तादृशं प्रमाणं उपलभामहे अथ त्वत्कृतव्याख्यया विरुद्ध्येत चेत् विरुद्ध्यतां नामकानोहानिःत्वद्व्याख्याया एवोपेक्ष्यत्वात् अविरोधे मूलवेदकल्पनायां प्रामाण्यं चिन्तनीयं अतस्सर्वथा त्वन्मतं शिथिलमेव अधिकं पत्रान्तरे वक्ष्यामि ॥

तस्मात् वैदिकानामधिकृतानां कर्मणि यागीयहिंसा न दोषमावहतीत्यन्यत्र विस्तार इति चतुरस्रं तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषादिति जैमिनिः पशुधर्माणां यूपनियोजन विशसनादीनामग्नीषोमीयपशौ नियमितवान् यदि ऋषिवाक्यं प्रमाणं स्यात् अन्यथा तवापिमतं तत्तुल्यमिति किंविचारणीयं इति शिवम् ॥

द्वितीयपत्रस्योत्तरमिदं यदाह किं ते प्रमाणमिति प्रश्नस्य समाधानं चतसृणां मूलवेदसंहितानां प्रामाण्यं क्रियत इति निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यमिति कपिलोऽपि स्वतः प्रामाण्यं



SGDL

संहितानामाहेति च तदसत् न नित्यत्वं वेदानां कार्यत्वश्रुते-रिति पूर्वसूत्रेण वेदमात्रस्यग्रहणेऽत्र संहितांग्रहणानुपपत्तेः न वेद-पदं संहितामात्रमाह मन्त्रब्राह्मणयोर्वेदनामधेयमितिपरिशिष्टेका-त्यायनर्षिराह आह च जैमिनिः वेदोवाप्रायदर्शनादिति परिशिष्टं न परिभाषापरं प्रामाणिकार्यवेदकृत्वाच्च वेद इति व्युत्पत्तिसं-भवात् मन्त्रेपि परिभाषापत्तेः मन्त्रो वा वेदशब्दभाङ् न स्यात् परिभाषां विना व्यवहारासंभवात् अदेङ्गुण इति तच्छास्त्रपरि-भाषावत् वैदिकपरिभाषापि प्रयोजनवत्येव व्यवहारलाघवं हि प्रयोजनमतोपि वेदपदं मन्त्रब्राह्मणसमुदायमेव वक्ति इत्थं च वेद सामान्यविचारं च प्रस्तुत्य संहितामात्रस्य प्रामाण्यं कथं ब्रूयात् कपिलर्षिः ॥

प्रमाणसिद्धाः कतिपदार्था इति प्रश्नस्योत्तरं, नाखिलवत्तत्र कारणं स एवजानाति यत्तुप्रमाणसिद्धाः यवादयोहव्यपदार्था इति तल्लेखनमनुपयुक्तं तस्य प्रश्नाविषयत्वात् विषयश्च प्रश्नस्य द्रव्यगुणादिरत्तोननुरूपं—यदर्थं तेषामुपगममिति तृतीयोपि प्रश्नोन समाहितः पदार्थानामनुक्तेस्तन्निबन्धितप्रयोजनानुक्तिसंभवात् दया-नन्दमुनेर्ह्दयापरिज्ञानमूलं वेति विदांकुर्वंतु सन्तः ॥

प्रमाणानां प्रामाण्यं किं रूपमिति प्रश्नतात्पर्यमजानन् मूले मूलाभावादमूलं मूलमिति यत्कपिलसूत्रमुदाहरत् तत्कारणस्य कारणान्तरांगीकारेऽनवस्थेति मूले कारणस्य कारणान्तराभावपरं नायं कारणान्तरं वा प्रमाणान्तरं वाऽपृच्छत् अज्ञातज्ञापकत्वं वा उततद्वृत्तिधर्माप्रकारकज्ञानजनकत्वं वा प्रामाण्यमिति तदवि-दित्वा एवं लेखनं श्रमकरमेव ॥

SGDF Sri Gangeshwari Digital Foundation

मन्त्रब्राह्मणयोर्वेदः प्रमाणं नवेति पृष्टप्रश्नस्य समाधानं प्रथमप्रश्नान्तर्गतमेवेति तन्न सम्यक्प्रमाणसामान्यविषयकः प्रथमः प्रमाणविषयको द्वितीयः तथा च प्रथमेन न द्वितीयसमाधिः।

वेदोक्तं कर्मानुष्ठेयं नेति प्रश्नोत्तरमनुष्ठेयमिति तत् सम्यगेव।

वेदैकदेशप्रामाण्ये किं मानमिति प्रश्नोत्तरं तदसदेव त्वनुक्तेः।

वेदार्थनिर्णायकं शास्त्रं किमप्यस्ति चेति प्रश्नोपि वेदार्थनिर्णायकानि षट्शास्त्राणीति सम्यक्समाहितः॥

स्मृतीनां प्रामाण्यमस्ति नवेति प्रश्नोपि वेदानुकूलं प्रमाणं स्मृतय इति लेखनं युक्तमेव परन्तु पुरापि नवं भवतीति लाक्षणिकोयं पुराणशब्द इति लेखनं न संगतं रूढ्यर्थपरित्यागात् मुख्येकार्यसंप्रत्ययन्यायविरोधात् ब्राह्मणं पुराणशब्दार्हं न भागवतादिकमिति तन्मंदं न ब्राह्मणं पुराणमिति प्रसिद्धं किं तु वेदत्वेन तथा च अक्षपादसूत्रं विध्यर्थवादानुवादवचनविनियोगादिति अत्र भाष्यं त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि विधिवचनान्यर्थवादवचनानि अनुवादवचनानीति—जैमिनिरपि शेषे ब्राह्मण शब्दइत्याह अत्र भाष्यं शावरं मन्त्राश्च ब्राह्मणं च वेदइति एवं वेदोवाप्रायदर्शनादिति ब्राह्मणे वेदपदप्रयोगः जैमिन्युक्तः ब्राह्मणस्य वेदत्वे संगतो भवति। अतो न ब्राह्मणं पुराणं। यदपि प्रयोगासाधुत्वं लिखितवान् स प्रष्टव्यः किं

SGDF
Sri Gurgeshwari Digital Foundation

भाव्यमिति शब्दासाधुत्वमुतार्थासाधुत्वं नाद्यः भूप्राप्ताविति
त्यस्मात् भावयितुं योग्यो भाव्य इति शब्दसाधुतासंभवात्
अत्र व्याकरणप्रमाणं पत्रान्तरे वक्ष्ये नामरूपगुणैर्भाव्य*मि-
ति प्रयोगात् भवन्तमिति परसवर्णाभावो लेखकप्रमादः
यत् लेखनीयमितिनासाधु संधेरविवक्षितत्वाद्वाक्ये प्रश्न इत्ये-
कवचनं नानुपपन्नं द्रव्यं गुणस्तथा कर्मेत्येकवचनं जा-
त्यभिप्रायं यथा तद्वत्प्रकृतेप्युपपद्यते तस्यापि उत्तरमिति
साधुरेव वाक्यत्वात् गीर्वाणवाण्येत्यपि साधुरेव वाणीप-
दस्य भाषापरत्वसंभवात् कालोपि शास्त्रार्थरसं पास्यतीति
त्वत्प्रयोगवत् ॥

स्वतः प्रामाण्यं क्रियत इति कथं ते प्रयोगः प्रामाण्ये
कृतिसाध्यत्वबाधात् तद्वदेव प्रमाणानां प्रमाणं भवितुम-
र्हतीति प्रयोगोनुचितः तद्वदेवेति वाक्यं हि यथा मूलममूलं
तथा प्रमाणं प्रमाणरहितमित्येतमर्थं प्रतिपादयति तद्विरुद्धं
चेदं प्रमाणानां प्रमाणं भवितुमर्हतीति कथं ह्यत्रबोधः प्र-
माणसम्बन्धिप्रमाणमित्यङ्गीकारे तत्प्रमाणं निरूपणीयं
नित्योनित्यानामितिवत्प्रमाणवृत्ति प्रमाणत्वसंपादकमिदं
प्रमाणमिति उपगमोप्यनुपपन्नः अनवस्थाप्रसंगात्। षष्ठ
प्रश्न इति वक्तव्ये तृतीय इति लेखनमशुद्धं किन्त्विति वक्तव्ये
किंचेति प्रयोगोनुपपन्नः ब्राह्मणानां न वेदत्वमित्यत्र हेत्व-
नुक्तेर्न्यूनतेति शिवम् ॥

* त्वाहसाविति सूत्रशेखरे न चैवं तत्रास्य चारितार्थ्यात् केवले परत्वा-
त्वयाभ्यां भाव्यमिति प्रयोगाच्च ॥

SGDF Sri Gargeshwari Digital Foundation

आषाढस्यासितेपक्षे सप्तम्यामिन्दुवासरे ।
न युक्ताः वैदिकीत्येष शास्त्रविनिर्णयः ॥

—***—

उत्तरम्-

याग़ीयहिंसामवैदिकीं प्रतिपादयन्तोवयं विप्रतिपत्त्यादिस्पष्टीकरणवाक्यजातानि दृष्ट्वाऽथ प्रमाणभूतानि वचांसि विचारयामः । वायव्यं श्वेतमालभेतेति वचनं न यागीयहिंसाया वेदबोध्यत्वस्य साधकं तत्र हेतुः-प्रकृतवाक्ये पशुपदादर्शनात्, यदि कथंचित् श्वेतमिति विशेषणेन विशेष्यस्य पशोर्ग्रहणं स्यात्तदाऽपि आलभेतेति क्रियापदस्य हिंसाऽर्थपरत्वाभावात्,आलम्भनक्रियायाः पर्यायक्रियापदं महीधरेणाऽपि स्वभाष्ये इत्थं विन्यस्तं दृश्यते । यथा-२४। २० यजुषि-" आलभते=नियुनक्ति" । इति । नहि केनाऽपि नियुनक्ति इत्यस्यार्थो हिनस्तीति प्रतिपादयितुं शक्यः । यच्चोक्तं " विधिबोध्या न वा वेदबोध्या नवा मन्त्रबोध्यानवेति" तदसत् । भवन्नये विधि शब्देन ब्राह्मणग्रहणात् विधिमन्त्रातिरिक्तस्य वेदस्याभावात् । विधिमन्त्रयोर्वेदपदवाच्यत्वे सति तयोरेकतरेणैव भवदभिप्रायसिद्धेः पदत्रयविन्यासोऽव्यर्थः पुनरुक्तश्च । आलम्भनक्रियाऽर्थो हिंसातिरिक्तो हि कात्यायनेनाप्यऽलेखि । यथा पौर्णमासेष्टिप्रकरणे-संयौति जनयत्यैत्वेति समं विभज्यासथं हरिष्यन्नालभत इदमग्ने-

SGDF
Sri Gurgeshwari Digital Foundation

रिदमग्नीषोमयोरिति हविरालम्भने । सहाज्यं देवस्य त्वेति श्रपणं माभेरित्यालभते तमेरुरिति पुरोडाशश्रपणविषये । इत्यादिषु यथाङ्पूर्वस्य लभधातोः स्पर्शने वृत्तिस्तथैव " वायव्यं श्वेतमालभेतेत्यत्रापि ऊह्यम् ॥

जातवेदो वपयेत्यादि यद्वपाहोमसाधकं वाक्यं मत्वाऽलेखि,न तदपि भवदिष्टसाधकं," तृतीयाऽष्टके प्रथम प्रश्ने " इति भवदुद्धृतस्थाने तावत्तु न भवता ऋग्वेदादा-वन्यतमस्य वेदस्य स्पष्टमुल्लेखः कृतः । यदि ह्यष्टकपदेन ऋग्वेदं कश्चिदनुमिनुयात् तदपि न। ऋग्वेदीयतृतीयाऽष्टके तादृगृचोऽदर्शनात् । ऋग्वेदे च प्रश्नानां ग्रन्थभागत्वेना-ऽविन्यासात् नाप्यनुमानं सम्यगुपपन्नं भवति अतएव कुत्रत्येयमृगिति निर्धारणपर्यन्तं सत्यनाऽऽवश्यकेऽपि अ-स्मदुत्तरे, किञ्चिमद्ब्रूः ॥

नेयमृग्वेदचतुष्टयान्तर्गता दृश्यते। नाप्यस्यां पशोर्वधोवि-धिवचनत्वेन,नचाऽनुवादवचनत्वेन,नाप्यर्थवादवचनत्वेन विहितोदृश्यते। केवलया"जातवेदः वपयादेवान्गच्छ"इत्यु-क्त्यानैवपशोर्वधोनिरूपयितुंशक्यः । यथाह्यन्त्येष्टिकर्मणि मृतानां जन्तूनां तत्तद्देहावयवानुद्दिश्योच्यते–"सूर्यंचक्षुर्ग-च्छतुवातमात्मा द्यांच गच्छ पृथिवीं च धर्मणा"इत्येवमादि-वचनैश्चक्षुरादीनां स्वस्वकारणलयो वर्ण्यते तथैवाग्नौ चितायां हूयमानानां जन्तूनां देहगतवपादेरपि वाय्वादिदेवान्प्रति गमनस्य प्रतिपादयितुं शक्यत्वात् नैतच्छक्यते वक्तुं यद्व-

SGDT Sri Gargeshwari Trust, Vrindavan

पोत्खेदनं पशुवधमन्तरा न संभवतीति । स्वयं मृतानामपि प्राणिनां वपाचर्माद्युत्खेदस्य लोके दृष्टचरत्वात् ॥

हृदयस्याग्रेवद्यतीति नास्ति वेदवचनम्, नाप्यस्य कुत्रत्यमिदं वचनमित्युल्लेखः कृतस्तत्रभवताऽच्युताश्रमादिस्वामिना । नापि "अवदानं सच" इति पुंनपुंसकयोः सामानाधिकरण्योक्तिर्वक्तुर्बोधसौष्ठवं व्यनक्ति । प्रत्यहमऽनेके पुत्रादयः पित्रादिषु कारणान्तरैर्मृतानां शरीराणि जुहुत्यग्नौ । तथा सति पशोर्गवाश्वोष्ट्रादेर्मनुष्योपकारक प्राणिवर्गस्य मृतस्य शरीरदाहादिषु नैव हिंसां पश्यामः "अत्र पशुपदं नास्तीति वक्तुं शक्यते" इति तु स्वयं चाह तत्र भवान् । समाधानं च न भवान्कृतवान् । तथात्वे पशु ग्रहणमप्यमूलमेव ॥

वसन्तायकपिञ्जलानालभते । इत्यस्योत्तरं पूर्वोक्तमेव ज्ञेयं, तत्राप्यालम्भनक्रियायास्तथाऽर्थत्वात् ॥

जैमिनीयसूत्रप्रमाणेन कपिञ्जलपदं हि प्राणिविशेषं वदतीति असाध्यसाधनं, नहि भवतां कपिञ्जलपदेन प्राणि विशेषग्रहणं साध्यं, किन्तु पशोर्वधः साध्योभवति । न च सोऽनेन मीमांसावचनेन साध्यते । टिप्पणीगतंभवत्कृतं व्याख्यानमपि न साधु " घृतेन=घृतवपया " इति । यदि कथंचित् घृतान्तर्गता वपा घृतपदेन संगृह्येत, तदेदमस्मत्सौकर्याय भवति, न भवत्पक्षसाधनाय । तत्र तत्र वपा शब्देन घृतान्तर्गतां वपां तथात्वे ग्रहीष्यामः ॥

SGDF

दृष्टः प्रयोग इतिचेदिति सूत्रं मीमांसादर्शने ११ ।१।३९ विद्यते नतु ११ अ० प्र० ८ अ० इत्यस्मिन्संकेते। न च मीमांसादर्शने प्र० इत्यक्षरसंकेतितः कोऽपि ग्रन्थविभागोस्ति तत्रहि १२ अध्यायाः प्रत्यध्यायं ४ पादाः सूत्राणि च सन्ति, न किमपि प्र०इतिसंकेतितम्। अन्यच्चाश्चर्यम् यद्यपि कपिञ्जल पदेन प्राणिविशेषग्रहणे न वयं विवदामहे,तथापि"कपिञ्जलपदंहि प्राणिविशेषंवदति आहच जैमिनिः दृष्टःप्रयोग इतिचेदिति " न समीचीनम् । दृष्टः प्रयोगइतिचेदितिसूत्रे तथा प्रतिपादनाभावात्। तत्सूत्रोपरि शबरस्वामिकृतं व्याख्यानं चेत्थम्—

" अथोच्येत दृष्टो बहुवचनस्य प्रयोगश्चतुरादिषु चत्वारो ब्राह्मणा इति ।तथेह। इहापि कपिञ्जल शब्दस्यदृष्टः प्रयोगः कपोते मयूरे च । महान् कपोत उच्यते,कपिञ्जलोऽयं न कपोत इति । तथाल्पो मयूरः कपिञ्जलोऽयं न मयूर इति " ॥

अत्रापि " कपिञ्जलानालभते " इति नोदाह्रियते किन्तु महान् कपोत उच्यते इत्यादि लौकिकवाक्यमुदाह्रियते । अथ नापि इदं सूत्रं सिद्धान्तपक्षस्थमपि तु पूर्वपक्षे आशङ्का वचनम् । इतःपूर्वं यदुक्तम् "बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यादिति ११ । १ । ३८" तदुपरि पूर्वपक्षे आशङ्कावचनमेतत् "दृष्टः प्रयोग इति चेत्"११ । १ । ३९ इति । एतदुत्तरं च-"भक्त्येति चेत्"११।१।४० इति आशङ्कानिराससूत्रम् । आशङ्कावचनं च सिद्धान्तायोपयुज्यमानं न साधु भवति ॥

SGTF

यद्यपि मीमांसादर्शने १२ अध्याये वेदविरुद्धानि सूत्राणि—"शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् १२। १। १३ मांसपाकप्रतिषेधश्च तद्वत् १२। २। २ मांसपाकोविहितप्रतिषेधः स्यादाहुतिसंयोगात् १२। २६ सवनीये छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् १२। २। ८ क्रिया वा देवतार्थत्वात् ९ लिङ्गदर्शनाच्च१० पशौतुसंस्कृते विधानात् १२ पशोश्चविप्रकर्षस्तन्त्रमध्ये विधानात् ३३ पशौ च पुरोडाशे समानतन्त्रं भवेत् ११। ३। १७ पश्वतिरेकश्च ११। ४। २५ पशुगणेकुम्भीशूलवपाश्रपणीनांप्रभुत्वात्तत्र प्रभावः स्यात् २९ पक्तिभेदात्कुम्भीशूलवपाश्रपणीनां भेदः स्यात् ३६" इत्यादीनि सन्ति बहूनि, परन्तु न तथास्मिन् (दृष्टः प्रयोगइतिचेत् ११। १। ३९) सूत्रे काचिन्मांसहोमस्य पशुवधस्य च पुष्टिरस्ति॥

छागोवामन्त्रवर्णादिति सूत्रं द्वादशाध्याये मीमांसादर्शने नैवास्ति। मुधैव द्वादशाध्यायस्थेन सूत्रेणेति भवल्लेखः। न च तादृक्सूत्रेण पशोर्वधस्य समर्थनं संभवति। वधक्रियाऽदर्शनात्। छागशब्दमात्रोपन्यासेन छागवधाऽसिद्धेः॥

छागस्यवपाया मेदसोऽनुब्रूहि। इति मन्त्रो न चतसृषु वेदसंहितासु दृश्यते, नापि कृष्णयजुषोऽपि संकेतस्तत्रभवता कृतोऽस्ति। किन्तु यजुर्वेदे २१। ४१ पाठभेदेन—"छागस्य वपायामेदसोजुषेताम्"इत्यादिकः पाठोदृश्यते। तत्र ततः पूर्वतनस्याश्विनाविति पदस्यान्वयोऽस्ति। अश्विपदेन च तत्र सूर्याचन्द्रमसोर्ग्रहणं सुकरम् तथासति सर्वस्य



SGDF Sri Gargeshwari Digital Foundation

प्राण्यऽप्राणिस्थस्निग्धभागस्य सूर्यचन्द्रमसिचोपयुज्यमा-नत्वे सुकरं व्याख्यानं,न ततोहि पशुवधस्य सिद्धिः कथमपि संभवति । यथाह निरुक्तकारः-" अश्विनौयद्व्यश्नुवाते सर्वंरसेनान्योज्योतिषान्यः ... अहोरात्रावित्येकेसूर्याचद्रमसा-वित्येके " ॥ निरु० १२ । १ एवंसति "मन्त्रेणापि हिंसोक्ते-ति हिंसा यागाङ्गम्" इत्युक्तिरमूला ॥

ओषधेत्रायस्व स्वधिते मैनꣳ हिꣳसीः (यजुः ।६ १५) इति स्पष्टं हिंसानिषेधकवाक्यस्यापि यत्रहिंसापरोर्थस्तत्र नास्ति पशूनां कुशलं,भाग्यं तेषां मन्दं मन्ये । अच्युताश्रम स्वामिभिरिव पूर्वैरपि कैश्चिद्वेदतत्त्वार्थमजानद्भिर्हिंसायां विनियोगः कृतोस्ति यं दृष्ट्वैव निरुक्तकार आह निरु० १ । १५ "अथाप्युपपन्नार्था भवन्ति ओषधेत्रायस्वैनम् । स्व-धिते मैनं हिंसीरित्याह हिंसन्" इत्याशङ्क्य-"यथोएतद-नुपपन्नार्था भवन्ति इत्याम्नायवचनादहिंसाप्रतीयेत " । निरु० १।१६ एतेन निरुक्तकर्त्तुर्यास्कस्य ध्वनिरियं प्रतीयते यत् अहिंसापरेणाम्नायवचनेन विनियुक्तेन हिंसा न कर्त्त-व्येति ।अन्यच्च-कात्यायनो महर्षिराह-मन्त्रान्तैः कर्मादिः सांनिपात्योभिधानात् । का० श्रौ० १ । ३ । ५ अर्थः-अभि-धानान्मन्त्रे तत्तत्कर्मप्रतिपादनात् मन्त्रान्तैर्मन्त्राणामन्त-वचनैः सह कर्मादिः सांनिपात्यः संनिपातयोग्यः करणीय इति यावत् । मनसि विचिन्त्य यथाकथनमेव कर्म कर्त्ता करोति । तदत्र यदि वेदेहिंसाभीष्टाऽभविष्यत् तर्हि हिं-सार्थपरामन्त्रा(येवस्तुतो नैव विद्यन्ते) एवविनियुक्ता अभ-

SGDF Sri Gurudev...t Digital Foundation

विष्यन् । तथाऽसति वेदो हिंसांनिषेधत्येव नतु विदधातीति सुव्यक्तम् । तथात्वे कात्यायन एव स्वोक्तिविरुद्धं कथं नाम सूत्रयेत्—उत्तानं पशुंकृत्वाऽग्रेणनाभिंतृणंनिदधात्योषधेइति का० ६ । ६ । ८ अतएवनैतच्छ्रद्धेयत्कात्यायनोमहर्षिरेव स्वोक्तिविरुद्धं पशुवधे पशुरक्षाविधायकं मन्त्रं विनियुञ्ज्यादिति । अपि केनचिदन्येनैतत्प्रक्षिप्तमिति मन्ये । न च कात्यायनकृतानि श्रौतसूत्राणि तैत्तिरीयशाखापराणि किन्तु मूलयजुर्वेदपराण्येवेति । तथात्वे तैत्तिरीयशाखमनुसृत्य तद्ब्राह्मणंवानुसृत्यतद्व्यवस्थापनंनयुक्तम् । न च मूलयजुर्विरुद्धमापस्तम्बंकश्चित्प्रज्ञावाञ्छ्रद्धास्यति । "मैनं हिंसीरिति स्वधितिना प्रहरतीति ॥"

"मन्त्र व्याख्यारूपस्य ब्राह्मणस्याऽप्रामाण्ये" इत्याद्युक्त्वा ब्राह्मणस्य मन्त्रव्याख्यात्वाङ्गीकारे व्याख्यायामूलाऽविरोधेनैव प्रमाणत्वात् न मूलमन्त्रविरुद्धा ब्राह्मणव्याख्या विद्वद्भिरादरणीया । अस्मद्व्याख्यानं तु न मूलविरुद्धं नापिवेदान्यदेशस्थहिंसानिषेधकवाक्यान्यस्मत्पक्षेविरुध्यन्ते । जातवेदोवपयेत्यादि पूर्वं प्रत्याख्यातम् । तथाऽग्नीषोमीयं पशुमालभेतऽइति वचनं न चतसृणां वेदसंहितानां मध्ये दृष्टचरम् नापि तत्र वधोविहितः । न च आलभेतेत्यस्यार्थो हिंस्यादिति वक्तुं शक्यम् । आलम्भनं च कूटादिप्रायश्चित्तपूर्वकोपाकरणरशनापरिव्ययणयूपनियोजनप्रोक्षणस्रुचयाघारानन्तरकालिकसमञ्जनपर्यग्नीकरण वपाश्रपणान्वारम्भणाधिगुप्रैषसमकालशामित्रानुनयना-

SGDF Sri Gurgeshwari Digital Foundation

धस्ताद्बर्हिरपासनप्रत्यङ्मुखावस्थापनवाशादिप्रायश्चित्तसंज्ञसहोमरशनाविमोकादिवाचकमिति भवदुक्तौ न किमपि मानमुपन्यस्तं भवता । वेदेषु वधस्याऽविहितत्वादुत निषिद्धत्वात् तत्त्यागे प्रायश्चित्ताऽनुक्तेर्नैतदालम्भनपदवाच्यं वेदविहितम् । मैनं हिंसीरिति स्पष्टंनिषेधवचनात् वेदविरुद्धा हिंसेति सुव्यक्तम् । मा हिंस्यात्सर्वाभूतानि इति संहितावाक्यं माभूत् । परं भवन्मतेऽन्येषां ग्रन्थानामपि प्रामाण्यात् न भवांस्तदऽनादरं कर्त्तुमर्हति । प्रकरणेन पशुग्रहणेऽपि तद्वधस्यानुक्तत्वादथ च तद्वधनिषेधात् (मैनं हिंसीरिति निषेधः ) न हिंसा विहिता ज्ञायते ॥

अथ यद्भवानाह—सन्ते प्राणोवायुना गच्छताᳬ समङ्गानि यजत्रैः । सं यज्ञपतिराशिषा ( यजुः ६ । १० ) आध्यात्मिक वायुः प्राणो बाह्यवायुना एकीभवतु पश्वङ्गानि यजत्रैः सह संगच्छन्तां यज्ञसाधनतां यान्त्विति तदर्थः । प्राणाऽगमने कथमेतदुपपद्यताम्—तस्मात्प्रकरण नियमोऽवश्यंवक्तव्यः । हिंसा उपेयेति ॥

अत्रोच्यते—पशो ! ( ते ) तव ( प्राणः ) प्राणवायुः ( वातेन ) बाह्यवायुना सह ( संगच्छताम् ) सङ्गं प्राप्नुयात् ( यजत्रैः ) यज्ञसाधनपदार्थैः सह ते ( अङ्गानि ) ( संगच्छन्ताम् ) ( यज्ञपतिः ) यजमानः ( आशिषा ) ( संगच्छताम् ) सङ्गं प्राप्नुयात् । संगमनं हि गमनार्थकं न संभवति । बाह्यवायुसंगे नविना कस्याऽपि प्राणाःक्षणमपि स्थातुं न शक्नुवन्ति किन्तु सर्वे जीवा बाह्यवायु-

SGDF Sri Gangeshwar Digital Foundation

संगेनैव जीवन्ति । अतोबाह्यवायुसंगोक्त्या पशोर्जीवनमेवोच्यते न तु मरणम् न च मारणम् ॥

यच्चोक्तमन्तरेण दोहनं पयो न निस्सरति, दोहनं च मातुर्वत्सस्य च दुःखं जनयति । दुःखदापूर्वजननानुकूलो व्यापारो हि हिंसा इत्यादि । तन्न समीचीनम् । यासां गवां पयो यजमानादिभिर्निस्सार्यते ताभ्यो विशिष्टं भक्ष्यंभोज्यं च दीयते तत्कृतोपकारप्रत्युपकाररूपेण यत्पयोगृह्यते न तद्धिंसाकरम् इतरथा तु वेतनेन दत्तेनाऽपि भृत्येषु हिंसा दोषापत्तिर्दुर्वारा । श्रीमता भवतापि च पूर्वं प्राणवियोगानुकूलोव्यापारो हिंसेति–हिंसालक्षणं लिखितं तथात्वे नहि पयोनिस्सारणे हिंसां पश्यामः । कश्चिद्न्यादिषु या क्षुद्रजन्तुहिंसा सा न यज्ञियाऽपितुलौकिकी,नापि सा प्राणिवधोद्देशकृताऽपितु अनुद्दिष्टा । तस्याश्चापि प्रायश्चित्तभूतं वैश्वदेवबलिकर्मप्रात्यहिकमृषिभिरुपदिष्टं येन स्पष्टं तस्या अपि पापजनकत्वं, तथैव रुद्रयागादिषु यैर्भवदादिभिरज्ञानमूलं पशुहिंसनमुपदिश्यते कार्यतेऽनुमोद्यते वा तदपि पापजनकं प्रायश्चित्तार्हमधर्मं वा स्वीकुर्वन्तु तत्र भवन्तः । "यजमानस्यपशून्पाहि" (यजुः १ । १) इति श्रुतिर्नयज्ञाङ्गपशून्पाहि इति पदं बोधयति इति भवदुक्तिरपि न युक्ता । तत्रैव यजमानशब्दसत्त्वात् यज्ञाङ्गत्वसुव्यक्तेः । सर्वेष्वेव यज्ञेषु घृताद्युपयोगेन पशवः प्रयोजनीयास्तद्रक्षणं च कर्त्तव्यत्वेनोपदेश्यमेव । यूपस्यखादिरत्वादिविधिः शास्त्रसंमता तत्फलं च विज्ञातमविज्ञातं

SGDF
Sri Gangeshwari Digital Foundation

वाऽस्तु न तेन कस्यापि पक्षसिद्धिः पक्षहानं वा। विहित प्रतिकूलपथाहृतेन लौकिकेन घृतादिना होमसिद्धौ यूपादि व्यर्थतोक्ता सा न। एवं चेत् पशुहोमार्थेपि मांसलाभो लोकसिद्धः स्यात् किं यूपादिनेति समानोदोषः॥

माभूदनुबन्ध्यपदे हननशङ्कातन्निरासश्च। कानो हानिः। यजमानप्रार्थ्ये द्विपदचतुष्पदसुखे यजनक्रियासंनिधानात् अवश्यं यज्ञसाधनपशूनां सुखं जीवनं च प्रार्थ्यते इति व्यक्तम्। अस्तु नामेह कृतानां कर्मणां भोगोऽमुत्र। नैतावताऽत्र कृतवधस्य पशोर्लोकान्तरे योन्यन्तरे च पशुत्वाभावात् पशुनिर्द्देशपूर्वकाशीःसंगतिरायाति॥

अध्वरशब्दे नञो निषेधार्थमनङ्गीकृत्याऽल्पार्थाङ्गीकारोऽपि यज्ञमर्मानभिज्ञतामूलः। निरुक्ते ध्वरतिर्हिंसाकर्मातत्प्रतिषेधोऽध्वरः इत्यर्थस्य विद्यमानत्वात्। सायणाचार्येणाऽपि "अग्ने यं यज्ञमध्वरम्०" ऋ०१।१।४ एतन्मन्त्रभाष्ये हिंसानिषेधार्थ एवविन्यस्तो न स्वल्पाऽपि हिंसाऽङ्गीकृता। एवं वेदे यागीयहिंसानिषेधात् वेदविरुद्धा वेदनिषिद्धा च हिंसा सा सुधीभिर्वैदिकैः सर्वदा सर्वथा वर्ज्यैव॥

अन्यदपि चाथर्ववेदे-मु॒ग्धा दे॒वा उ॒त शुना॑यजन्तो॒त गोर॑ङ्गैः पु॒रु॒धाय॑जन्त ७।५।५॥

इत्यादिना पशुना यजनं मुग्धकृतं वदन् निन्दति निषेधति च वेदः। अत्र देवा इत्येतेन यजमानाः इति वदति च सायणाचार्यः। तथा च सायणमतेनापि पशु-

SGDF Sri Gangeshwari Digital Foundation

यजनस्याऽज्ञानियजमानकृतत्वात्पशुहिंसा न यज्ञेकेनापि ज्ञानिना वेदाभिप्रायविदाकर्त्तव्येति स्पष्टमेव ॥

एवं बहुधा यागीयहिंसायावेदाऽप्रतिपाद्यत्वेवेदविरुद्धत्वे वेदनिषिद्धत्वे च सिद्धे कोविद्वान् अस्याः समर्थनं कुर्यात् ॥ अध्वरशब्दो यदि यज्ञे रूढोऽभविष्यत् न योगरूढस्तर्हि निरुक्तकारोऽस्य निर्वचनं नाकरिष्यत्। "ध्वराहिंसा तद-भावो यत्र" सोध्वर इति देवराजयज्वा निरुक्तभाष्यका-रोऽपि नावदिष्यत् । तस्मात् हिंसारहित एव यज्ञो भव-तीति सिद्धम् । न त्वल्पहिंसायुक्तोऽध्वरः । भवतां चेयम-ल्पार्थेनञ्कल्पनास्वकपोलकल्पनैव नान्यदिति दिक् ॥

"यद्धि शास्त्रं हिंसा दोष इति प्रत्यपादि" इत्यत्र येन शास्त्रेणेति वक्तव्ये यद्धिशास्त्रमित्युक्तिरयुक्ता । न च वेद शास्त्रं सनातनं हिंसां प्रतिपादयति यागे । अतएव राज्ञां शिक्षणरक्षणयोरधिकृतानां हन्तुर्हननदोषाऽभावइव यागी-याहिंसानवेदविहिता । अविहिता च सती न दृष्टान्तम-र्हति । सन्यायोवेति वक्तव्ये तन्न्यायोऽत्रेत्युक्तिरपि वक्तु-रुक्तेरयुक्तत्वसाधिका ॥

मांसं तु सवनीयानां चोदनाविशेषादिति यदाह भवान् जैमिनिसूत्रम् । तदप्यसत्। तत्रोपन्यस्तहेतोरसत्त्वात्। "चो-दनाविशेषात्" इति हेतोर्वेदविहितत्वाऽभावात् । अपि च तद्विरुद्धत्वात्तन्निषिद्धत्वाद्वा ॥

"वेदार्थनिर्णयार्थं षण्णामपिसूत्राणां प्रामाण्यम्" इति लेखनं मूलाविरोधपर्यन्ततात्पर्येण । न तु यदर्थनिर्णयार्थं षण्णां शा-

SGDF
Sri Gargeshwari Digital Foundation

सूत्राणां प्रामाण्यमभ्युपगम्यते तद्विरोधार्थं तत्प्रामाण्यमभ्युपगन्तुं शक्यम् । एतेनैव " शमिता च शब्दभेदात् " इत्यपिप्रत्युक्तं बोध्यम् ॥

अनुबन्धं क्षयं हिंसामित्यादिवाक्यान्तर्गतमोहजनित हिंसादिपापकर्मणां तामसत्वे यदाह भवान्—"नहिशास्त्रप्रयुक्ता प्रवृत्तिर्मोहमूला" इति तदसत् ! तत्रानुबन्धादीनां सर्वेषामेव मोह मूलत्वोक्तेः । शास्त्रे च तदऽप्रतिपादनात् ॥

बीजैर्यज्ञेषुयष्टव्यमित्यादिवचनानां वसुना प्रत्युक्तत्वेऽपि ऋषिमतविरुद्धत्वात् प्रत्युक्तेरहैतुकत्वाच्च समादर एव वैदिकैःकर्त्तव्यः।

धूर्तैः प्रवर्तितं ह्येतन्नैतद्वेदेषु कल्पितमिति भारतवचने स्पष्टं हिंसानिषेधेऽवैदिकत्वे चोक्ते तस्य कामकृतनिन्दापरत्वोक्तिः साहसमूलाऽमूला वा । न तत्र वैदिककर्मणो निन्दाऽपि तु हिंसाया अवैदिकत्वं धूर्तकल्पितत्वं चोक्तम् ॥

उक्तप्रकारेण मीमांसादर्शनस्थसूत्राणां तेषां स्पष्टमवैदिकत्वे सिद्धे तन्मतेनैव तदऽप्रामाण्यं सुव्यक्तम् ॥

तथात्वे वेदस्मृतिभारतादिशिष्टवचनैर्हिंसाया यज्ञे निषिद्धत्वादऽविहितत्वाच्च यागीया हिंसा वैदिकैस्त्याज्यैवेति निरवद्यम् ॥ इति शिवम् ॥

---

अथ द्वितीयपत्रोत्तरप्रत्युत्तरम्

निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यमिति वेदानां स्वतःप्रामाण्येऽस्मदीयं कापिलसूत्रम्, न चाऽत्रब्राह्मणसंग्रहे किमपि पदं पश्यामः । पारिभाषिकं मन्त्रब्राह्मणयोर्वेदत्वं न सार्वत्रिकं

SGDF
Sri Gurudakshina Digital Foundation

भवितुमर्हति परिभाषाहि तत्तद्ग्रन्थपरैव नतु सार्वत्रिकी। नहि कापिलीयं परिभाषा किन्तु कात्यायनकृता। तथासति वेदपदेन कथं कपिलोमन्त्रब्राह्मणात्मकं समुदायमभिप्रेयात्॥

प्रमाणसिद्धाः कति पदार्थाः इति प्रश्नस्योत्तरं प्रश्नाऽविषयत्वगतं तर्हि वक्तव्यं किमभिप्रायकः प्रश्न इति। प्रश्नविषयश्च स्पष्टीकरणीय इति॥

यदर्थं तेषामुपगममिति क्लीबत्वनिर्द्देशोदौर्बल्यं सूचयति॥

प्रमाणानां प्रामाण्यं किंरूपमिति यदि भवान् नास्मदुत्तरविषयमपृच्छत् किन्तु इदानींपत्रेऽस्मिन्नुद्धृतमपृच्छत् तर्हि प्रश्न एवाऽज्ञानमूलो व्यर्थो वा "अज्ञातज्ञापकत्वं वा उत तदऽवृत्तिधर्माऽप्रकारकज्ञानजनकत्वं वा प्रामाण्यम्" इति द्वयोस्तात्पर्यैक्यात्। द्वौनञौ प्रकृतमर्थमनुगमयतः इति द्वाभ्यां नञ्भ्यां तद्वृत्तिधर्मप्रकारकज्ञानजनकत्वार्थावगमात्॥

पुरानवं भवतीति पुराणव्युत्पत्तिर्न योगरूढ्यर्थत्यागपरा। सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि चेत्यादि लाक्षणिकपुराणपदस्य गोपथादिषु घटमानत्वाद्ब्राह्मणानां पुराणत्वं सुवचम्॥

अक्षपादसूत्रे यदाह भवान् विध्यर्थवादेत्यादि तन्न वेदपरम् किन्तु शब्दप्रमाणपरम्। एतस्मात् अक्षपादमतेनाऽपि न ब्राह्मणं वेदः। नापि वात्स्यायनमतेन। "शेषे ब्राह्मणशब्द" इति वदन् जैमिनिरपि "शेषःपरार्थत्वात्" इत्युक्त्वावेदार्थोपनिबन्धीनिब्राह्मणानि वेदभिन्नान्येवाह, न तदन्तर्गतानि। मन्त्राश्च ब्राह्मणं च वेद इति शावरं भाष्यं न जैमिनिहृदयपरमतो नाऽपेक्षणीयम्। शेषः परार्थत्वात् इति जैमिनिसूत्रविरोधात्॥



SGDF
Sri Gargeshwari Digital Foundation

अथ प्रयोगसाधुत्वसमाधौ यदाह—विचारश्च भाव्यः इत्यस्य समाधानं तदसत्। तत्र भुवः प्राप्त्यर्थाभावात्। नामरूपगुणैर्भाव्यमितिप्रयोगात् इत्युक्ताऽस्मत्पक्षपरभवदुक्तेश्च ॥

भवन्तमिति लेखकप्रमादस्तदामन्येत यदा यत्र तत्र पीतवर्णेन भवत्कृतो हि शोधो न स्यात्। अन्यत्र वा प्रायोऽयं दोषो न स्यात्॥

यल्लेखनीयमित्यत्रसंधेरविवक्षितत्वे विश्लेषपूर्वकोल्लेखो भविष्यत् ॥

प्रश्नानां बहुत्वे प्रश्नइत्येकत्वनिर्देशोऽयुक्त एव। जातिपरत्वे प्रश्नानां बहुत्वसंख्यान्वितत्वस्याऽयुक्तत्वात् ॥

गीर्वाणवाण्यालेख्यं इत्यत्र नास्माकमाक्षेपोवाणीपदप्रयोगे। किन्तु लेख्यं इत्यत्रानुस्वारोपरि अवसानत्वात्। तत्राऽधस्ताद्रेखासंकेतं दृष्ट्वाऽपियद्भवताऽन्यथा समाहितं तदज्ञानमूलमेव ॥

प्रामाण्ये कृतिसाध्यत्वबाधादिति हेत्वाभासः अङ्गीकारादिष्वपि कृञः प्रयोगसत्त्वात् ॥

प्रमाणानां प्रमाणरूपाणां ग्रन्थानां वचनं प्रमाणं भवितुमर्हतीति समाधानात्प्रमाणमिति साधु ॥

"किं ते प्रमाणं ? तत्सिद्धाःपदार्थाःकति ? यदर्थं तेषामुपगमः" इति वाक्यत्रयस्यैकत्र समावेशात् तृतीयप्रश्नस्येति लेखो युक्त एव। अन्यथापि कथंचिदपि न षष्ठत्वं, भवन्नयेपि प्रथम प्रश्नस्य प्रश्नत्रयत्वाङ्गीकारे पञ्चमत्वमायाति न षष्ठत्वम्। किन्त्विति तत्रवक्तव्यमित्यत्र हेत्वनुक्तेस्तथोक्तिर्न्यूना ॥

ब्राह्मणानां न वेदत्वमित्यत्र हेत्वनुक्तिर्न न्यूनता वेदत्वसाधकहेतूनां हेत्वाभासनिरूपणस्यैव पर्याप्तत्वात् ॥ इति ॥

SGDF
Sri Gargeshwari Digital Foundation

तात्पर्य—

प्रथम हम स्वामी अच्युताश्रम जी की संस्कृत चिट्ठी का तात्पर्य लिखते हैं फिर अपने उत्तर का तात्पर्य भाषा में लिखेंगे। हम पाठकों को स्मरण दिलाते हैं कि आर्यसमाज हैदराबाद के मुद्रित लघु पुस्तक के उत्तर में जो स्वामी अच्युताश्रम जी ने पत्र भेजा था जो वेदप्रकाश भाग ( वर्ष ) ६ मास ४ पृष्ठ ७४ पर छप चुका है और जिस का उत्तर भी आर्यसमाज की ओर से दिया हुआ वेदप्रकाश वर्ष ६ मास ५ पृष्ठ ८५ से ९२ तक छप गया है, उसी हमारे उत्तर के प्रत्युत्तर में स्वामी अच्युताश्रम जी का यह पत्र है जिस का तात्पर्य हम नीचे छापते हैं। प्रकरण के लिये पाठक वर्ग सब छपे पत्रों को मिला कर पढ़ेंगे तो भले प्रकार समझ में आवेगा॥

## चिट्ठी का तात्पर्य

कोई लोग यज्ञ की हिंसा पर विवाद करते हैं कि यह विधिबोधित वेदबोधित और मन्त्रबोधित है वा नहीं। इस में हिंसा विधान पक्ष वैदिकों का (हमारा) और निषेध पक्ष दयानन्दियों का है कि जो ब्राह्मण को वेद नहीं मानते। इस में "हिंसा" मात्र पक्ष नहीं है क्योंकि रागपूर्वक हिंसा में बाध है। किन्तु " यज्ञ की हिंसा " पक्ष है। राग लौकिक है परन्तु स्वर्गविषयक प्रवृत्ति उस से भिन्न है॥

इस विवाद में यज्ञ की हिंसा विधिबोध्य है क्योंकि यज्ञ का अङ्ग है। जैसा कि सोमाऽभिषव। जो जिस का अङ्ग हो कर किया जाता है वह उस कर्म के बोधक वेद का बोध्य हुवा। इस व्याप्ति के अनुसार हिंसा भी वेदबोध्य सिद्ध है। प्रयाज के तुल्य प्रधानकर्मप्रयुक्तक्रिया होने से यह हिंसा अङ्ग है। इस से विशेषण भी सिद्ध है॥ इस प्रसंग में—

वायव्यं श्वेतमालभेत।

इस प्रकार याग कहा गया। वह यज्ञ देवतोद्देश से द्रव्यत्यागात्मक होता है। वह त्याग कहीं होमपूर्वक और कहीं छोड़ने से त्याग होता है। जहाँ होमपूर्वक है वहां पशुरूपी द्रव्य विना हत्या के संभव नहीं। इस से हत्या की अपेक्षा है। इस से इस हिंसा के मुख्य यज्ञ रूप कर्म में काम में आने से हेतु की असिद्धि नहीं ( सिद्धि है )। न केवल यहां पशु का होम ही है। प्रत्युत वपाश्रपणादि का भी श्रुति विधान करती है:—

SGDF
Sri Gargeshwari Digital Foundation

जातवेदोवपया गच्छ देवान् त्वꣳहि होता प्रथमोबभूथ ।
घृतेन त्वं तनुवोवर्धयस्व स्वाहा ॥

तृतीय अष्टक । प्रथम प्रश्न । इस ऋचा में वपा का होम कहा है कि-हे अग्ने ! तू वपा से देवतों की ओर जा क्योंकि तू ही मुख्य होता है । तू घृत=घृतस्थ वपा से देवतों के देहों को बढ़ा । इस हव्य को देवता खावें ॥

हृदयस्याग्रेवद्यति

इस से हृदय काटना । सो यह पशु मारे विना नहीं हो सकता । क्योंकि इस के विना न वपा उखड़ती न काटना बन सकता है । बस हिंसा नहीं बच सकती क्योंकि प्राणवियोगानुकूल व्यापार को हिंसा कहते हैं और पशु के होम में भी प्राण वियुक्त होता है । यद्यपि यहां संहिता में पशु पद नहीं है । यह ( प्रतिवादी ) कह सकता है ॥

वसन्ताय कपिञ्जलानालभते

यह शुक्लयजुः संहिता में कपिञ्जल का आलभन कहा है । कपिञ्जल शब्द प्राणिविशेष का वाचक है । जैमिनि भी कहता है कि-(११ अ० प्र० ८ अ०)

दृष्टः प्रयोग इतिचेत्

और अध्याय १२ के सूत्र-

छागोवा मन्त्रवर्णात्

से बकरेकी वपा रूप मेदोविशेष का ग्रहण प्रतिपादित है । इस से मन्त्र से भी हिंसा कही गई । इस कारण हिंसा यज्ञाङ्ग है ॥

मा हिंस्यात्सर्वा भूतानि

यह वचन सामान्यतः हिंसानिषेधक है, न कि विशेषतः । और हिंसा की विधि विशेष विधि है । विरोध में उत्सर्ग अपवाद=सामान्य विशेष का न्याय लगाया जाता है ॥ और यह जो मन्त्र है कि-

ओषधे त्रायस्व स्वधिते मैनं हिंसीः

इस का अर्थ यह है कि-हे ओषधे=उपाकरण की दूसरी कुशा ! तू इस पशु की रक्षा क्षुर छेदनार्थ बचा ।।

प्रकरण से कुशा बीच में करके छेदने का नाम रक्षा है । कुशा बीच में विना किये छेदने में पशु रक्षित न रहेगा । अर्थात् देवतों के योग्य न रहेगा । हे पैनी धार के ! तू इस पशु को मनुष्य के समान मत मार । तथा च ब्राह्मण,तैत्तिरीय संहिता छठे काण्ड तीसरे प्रपाठक नवें अनुवाक में कहा है कि-

ओषधे त्रायस्वैनं स्वधिते मैनं हिंसीरित्याह वज्रो वै स्वधितिः । ( इत्यादि ) ॥

इस मन्त्र से भी हिंसाभाव नहीं समझा जाता है । यदि समझा जाता तो यूपच्छेदन में विनियोग न करता । और विनियोग आपस्तम्ब ने कहा है कि—

ओषधे त्रायस्वैनमित्यूर्ध्वाग्रदर्भमन्तर्धाय स्वधिते मैनं हिंसीरिति स्वधितिना प्रहरतीति ॥

इस से पाया जाता है कि दो कुशा बीच में विना किये न काटे किन्तु बीच में (२ कुशा) का व्यवधान करके काटे, नहीं तो काटने होम करने का विधान न करता और प्रकरण का पाठ भी व्यर्थ होता । फलवान् अर्थज्ञान के लिये अध्ययनका विधान है और अर्थज्ञानकी सफलता यज्ञ द्वारा है क्योंकि—

विद्वान्यजेत

विद्वान् यज्ञ करे । इत्यादि से अर्थज्ञान को यज्ञाङ्गता समझी जाती है । यह भी नहीं कह सके कि मन्त्रार्थविरुद्ध ब्राह्मण अप्रमाण है । क्योंकि ब्राह्मण संहिता के अन्तर्गत है । यदि कहो कि संहिता में भी कोई भाग अप्रमाण है सो नहीं । मन्त्रभाग भी वैसा हो तो क्या हानि है । वेद में विरोध को भी उक्त रीति से एकवाक्यता सिद्ध होने से मेरी तो कोई हानि नहीं । मन्त्र की व्याख्यारूप ब्राह्मण को प्रमाण न मानने पर तेरी व्याख्या की प्रामाणिकता पर भी सन्देह होगा । अस्तु—मन्त्र भी तो उक्त अर्थ का ही पोषक है जैसा कि " जातवेदोवपया " इस मन्त्र से वपाग्रपण की सिद्धि कही गई । इस से हिंसा वेदबोध्य सिद्ध है ॥

जो हिंसा को विहित नहीं मानता उस से पूंछना चाहिये कि हिंसा क्या अधर्म है ? यदि अधर्म है तो क्या १—वेदविहित न होने से ? या २—निषिद्ध होने से ? १—पहला पक्ष इस लिये ठीक नहीं कि हिंसा के अधर्म होने में प्रमाण नहीं । अधर्म वेदविरुद्ध को कहते हैं, वेदविरुद्ध उस को कहते हैं जो वेदविहित से भिन्न हो । वेदविहित वह है जो लिङ्लकारादि द्वारा आज्ञा का विषय हो ॥

SGDF
Sri Gurgeshwari Digital Foundation

# अग्नीषोमीयं पशुमालभेत

इस वचन से आलम्भन की आज्ञा होने से हिंसा धर्म ही हुई। ऐसे ही—

## वसन्ताय कपिञ्जलानालभते

यहां भी जानो ॥ आलम्भन का अर्थ=कूटादिप्रायश्चित्तपूर्वक उपाकरण, रस्सी लपेटना, यूपसे बांधना, प्रोक्षण, स्रुच्याधार के पश्चात् समञ्जन, पर्यग्नीकरण, वपापकाना, अन्वारम्भण, अध्रिगु की आज्ञा के साथ शामित्रशाला को ले जाना, नीचे कुशा बिछाना, पश्चिमाभिमुख खड़ा करना, काशादि प्रायश्चित्त, संज्ञप्त होम, रस्सी खोलना, अङ्गाऽऽप्यायन, वपा उधेड़ना, उस का तपाना, उस का निकालना, उस का अभिघारण, एकादशावदान, उद्धरण, पशीजने को पूछना, उस का उत्तर देना, हविगुदकाण्ड जाघनी होम इत्यादि क्रियाओं को आलम्भन कहते हैं। इन में से किसी एक के लोप होने पर प्रायश्चित्त है, इस से यह सब आलम्भन पद का वाच्य है। इस से हिंसा वेदविहित है, इस से अधर्म नहीं। हिंसानिषिद्ध भी नहीं क्योंकि निषेधवचन कोई नहीं है। "माहिंसीः" का दूसरा अर्थ है। यह कह चुके हैं! "माहिंस्यात्सर्वाभूतानि" यह न संहिता में, न ब्राह्मण में है। प्रमाणता बतलाओ। यदि कहो कि मूल वेद के अविरुद्ध होने से प्रमाण है, सो भी नहीं। आप मूल वेद के ही अभाव को देखें। यदि मूलवेद दयानन्दोक्त अर्थ को ही कहता तो अविरोध होता। यह भी नहीं, क्योंकि प्रकरण विरुद्ध है। प्रकरण पशु का है। अन्यथा "एनम्" पद पशुवाचक क्यों होता। और आप भी कहते हैं कि "एनम् पशुम्"=इस पशु को। यदि प्रकरण नियामक न होता तो "इस को" कहने से "यजमान को" वा "घट को" क्यों न समझ लिया जावे। इस से प्रकरण से ही "पशु को" आप कहते हैं। इस से "माहिंसीः" का वह अर्थ नहीं। और—

## सन्ते प्राणो वायुना गच्छतां सं यजत्रैरङ्गानि ॥

ये मन्त्र कैसे संगत होंगे। "आध्यात्मिक वायु प्राण बाह्यवायु से मिले, पशु के अङ्ग यज्ञ के साधन बनें"

यह उन का अर्थ है सो जब तक प्राण न जावें तबतक कैसे संभव है। इस से प्रकरणका नियम अवश्य कहना चाहिये कि हिंसा प्राप्त है। किस प्रकार हिंसा अधर्म वा निषिद्ध है? और हिंसा का तात्पर्य भूतमात्र की हिंसा वर्जित है। इस दशा में तेरे होम की सिद्धि भी घृतादि से कैसे होगी? बिना हुवे

